## [1]विमुक्तिसमुद्यातनतन्त्र

[ 1 ]

[2]नास्ति तत्त्वव्रतं पुंसां महाफल[ प्र ]दं यतः।
क्वचिच्चित्ताधिमुक्तानां वासना त्यज्यते कथम् ॥
न तेन शोधितं चित्तं योगतन्त्रव्रतस्थितम्।
केवलं भिन्नदृष्टित्वात् प्रबुद्धोऽपि विनश्यति ॥
न कृतघ्न[ स्त ]तस्त्वन्ये ये प्रबोधिं गता नराः।
दीपवद् यान्ति निर्वाणं न सिद्धिमनुभुञ्जते ॥
नान्यः[ सत्त्वेन रहितः ]स्वशरीरस्य जायते।
विप्रत्यक्षकामश्च निर्वाणं यः प्रपद्यते ॥
प्रबुद्धकारणाच्चेह निर्वाणं ये नरा गताः।
सुखानन्तान् परित्यज्य सिद्धमिष्टं फलं तदा ॥

[ 2 ]

[3]पारदश्चाग्निसंयोगाद् यथा भावं प्रपद्यते।
दह्यते दृश्यते नैव गच्छन्नो धूम एव वा ॥
गोमयाधारयोगेन यथा संगृह्यते पुनः।
ज्ञानमेवं विजानीयाद् महामुद्रा[ समं तथा ] ॥

## [4]वैरोचनाभिसम्बुद्धि[ तन्त्र ]

[ 1 ]

[5]उपायै रहितं ज्ञानं शिक्षा वाऽपि हि देशिता।
श्रावकाणां महावीरेणा[ व ]ताराय तेषु वै ॥

---

1. इस तन्त्र के विषय में भी अभी तक हमें कोई विशेष जानकारी कहीं से नहीं मिल पाई है।
2. त० सि०, पृ० 16-17
3. त० सि०, पृ० 17
4. 'धीः' के तीसरे अंक ( पृ० 44 ) में क्रियासमुच्चय ( पृ० 5 ) में उद्धृत वैरोचनाभिसम्बोधितन्त्र का एक श्लोक संकलित है। स्वल्प पाठभेद के साथ वही वचन यहां वैरोचनाभिसम्बुद्धि का कहा गया है। ये दोनों ग्रन्थ अभिन्न हो सकते हैं।
5. त० सि०, पृ० 7

## [1]सर्वकल्पसमुच्चयतन्त्र

[ 1 ]

[2]पञ्चबुद्धाः समासेन पञ्चकामगुणाः स्मृताः।

## [3]सर्वदेवसमागमतन्त्र

[ 3 ]

[4]यैरेव मूढा बध्यन्ते बुद्धाः क्रीडन्ति तैरिह।
सर्वे सम्पूर्णयोगेन अन्यथा यान्ति दीपवत्॥

[ 4 ]

[5]गुप्तलोकोत्तरां चर्यां विचरन्त्यविकल्पतः।
प्रमादश्चान्यथा जायेद् विकल्पस्तत्र युज्यते॥
निर्विकल्पेन भावेन सर्वकारेण सर्वदा।
सत्त्वमास्थाय निःशङ्कस्तदा सिद्ध्यत्यसंशयम्॥
सत्त्वेन निर्विशङ्केन सर्वावस्थोऽपि सर्वदा।
सर्वाचारप्रवृत्तोऽपि न बन्धमुपयास्यति॥
निःशेषाचारसंचारो निर्विकल्पेन चेतसा।
सर्वेन्द्रियोपभोगेन सत्त्वस्थो हि न बध्यते॥

[ 5 ]

[6]शून्यरूपमिदं सर्वं शून्याकारेण चक्षुषा।
पश्यतां निर्विकल्पानां सतां निःशङ्कता भवेत्॥

[ 6 ]

[7][सर्वाणि] व्योमरूपाणि व्योमरूपेण चेतसा।
भावनान्निर्विकल्पत्वं निःशङ्कत्वं प्रजायते॥

---

1. जापान से सन् १९३४ में प्रकाशित तंजुर-कंजूर सूची में 367 संख्या पर सर्वकल्पसमुच्चय नाम सर्वबुद्धसमायोग डाकिनीजालसंवर उत्तरोत्तर तन्त्र मिलता है। वह इसी का नाम लगता है।
2. त० सि०, पृ० 28
3. सुभाषितसंग्रह ( पृ० 67, 82 ) में उद्धृत इस तन्त्र के दो वचन 'धीः' के चौथे अंक ( पृ० 34-35 ) में संकलित हैं।
4. त० सि०, पृ० 8
5. त० सि०, पृ० 8-9
6. त० सि०, पृ० 9
7. त० सि०, पृ० 9

[ 7 ]

[1]सोपायं सर्वकर्माणि निर्विशङ्कश्चरेत् तदा।
[ निर्विशङ्केन भावेन ] व्रतानामुत्तमोत्तमः ॥

[ 8 ]

[2]निर्विकल्पेन भावेन सर्वकर्माणि सर्वदा।
आचरेन्निर्विशङ्केन तपसामुत्तमं तपः ॥
विषयान् सेवमानस्य निर्विकल्पेन चेतसा।
कुत्साधितं न वा चेतस्तन्तपो दुरतिक्रमम् ॥
यस्तु सर्वाणि कर्माणि प्रज्ञया विनियोजयेत्।
सर्वं शून्यपदे योज्यं तपो ह्येष महात्मनाम् ॥
प्रज्ञासंक्रन्तिरूपेण निर्विकल्पेन चेतसा।
निःशङ्काचारसंञ्चारतपस्तेषां महात्मनाम् ॥
प्रज्ञोपायं विनाऽन्यत्र यदि चित्तं न संक्रमेत्।
नियतं तत्समुद्दिष्टं महाबोधिप्रदायकम् ॥
योगिनामभियुक्तानां निर्विकल्पानुगामिनाम्।
तेषां सर्वाणि भूतानि [ विलासार्थं ] च सृष्टवान् ॥
प्रज्ञादर्पणसंक्रान्तं तदाकारं च संस्कृतम्।
[ प्रज्ञाजाता स्मृति ]स्तेषां निर्विकल्पात्मचेतसाम् ॥
दर्पणप्रतिबिम्वं च स्वप्नं मायां (स)बुद्बुदम्।
इन्द्रजालं च सदृशं यः पश्येत् स प्रभुः स्मृतः ॥
तडिद्गन्धर्वनगरं विपाकं चैव संस्कृतम्।
तदाकारं प्रपश्यन्ति तस्यायत्ताः प्रजाः स्मृताः ॥

[ 9 ]

[3]सुरासुराणां भूतानां प्रतिबोधिनं विद्यते।
कीर्तयन् तेन सर्वाङ्गमानन्दं चोपभुंञ्जते ॥

---

1. त॰ सि॰, पृ॰ 9
2. त॰ सि॰, पृ॰ 9-10
3. त॰ सि॰, पृ॰ 15-16

अतस्तेनातिगच्छन्ति निर्वाणं दीपा( पका ) यथा ।
निर्वाणाग्निर्महाघोरो भस्मान्यपि न मुञ्चति ॥
न तत्र तत्त्वं विद्यते( द्येत ) नेन्द्रियार्था न धातवः ।
न मन[ श्चैत्तकं नापि ] नाहङ्कारो न धीरपि ॥
न च[सत्त्वं]न च प्रज्ञा न चित्तं नैव किञ्चित्(ञ्चन) ।
सुषुप्तावस्थिताकारं निर्विकल्पं निरात्मकम् ॥
न संज्ञा न च चेष्टा तु न रूपं न गुणः क्वचित् ।
निर्वाणं तत्समुद्दिष्टं मोक्षं तु निष्कलं भवेत् ॥
ज्ञात्वा संसारभावस्य निःस्वभावस्वभावताम् ।
तदा प्रबुद्धो विज्ञेयो निर्वाणं यदि नेच्छति ॥
ज्ञात्वा सद्भावसारूप्यं निःस्वभावस्वभावताम् ।
निर्वाणं यः प्रपद्येत विना सिद्धिं न वीर्यवान् ॥
न कृतनाशश्चान्यो जायते हीनचेतसः ।
यः परां बोधिमासाध्य(द्य) विना सिद्धेः प्रहीयते ॥
[1]किं तेन न कृतं पापं चौरेणात्मापहारिणा ।
बुद्धात्मनः शरीरस्य सिद्धिं सौख्यैर्न पूरयेत् ॥
न तस्य विद्यते वीर्यं न च सत्त्वं प्रतिष्ठितम् ।
यः परां बोधिमासाद्य निर्वाणं यात्यसिद्धितः ॥
[ नान्यो ] हीनतरस्तस्मान्नान्यः स्याद् दुर्जनो जनः ।
यः परां बोधिमासाद्य त्यजते स्वशरीरकम् ॥
तद्वीर्यं सर्ववीर्याणां यः प्रबुद्ध्वा प्रवर्तते ।
सर्वेन्द्रियोपभोगेषु रतस्तन्ना[पि] बध्यते ॥

[ 10 ]

[2]चतुर्विधं च यद्भूतं यत्किञ्चिज्जगतीगतम् ।
सर्वोपकरणं प्रोक्तं योगिनां सिद्धचेतसाम् ॥
महामुद्रां समाधाय महासत्त्वमुदाहरन् ।
पदशः सर्वमेवाहं भावयेत् तत्त्वयोगतः ॥

1. तुलनीय—मनुस्मृति,
2. त० सि०, पृ० 28

## [1]संवरतन्त्र

[ 3 ]

[2]आत्मा वै सर्वबुद्धत्वं सर्वशौरित्वमेव च।
स्वाधिदैवतयोगेन तस्मादात्मैव साधयेत् ॥
न योगः प्रतिबिम्बेषु निषिक्तादिषु जायते।
बोधिचित्तमहोद्योगाद् योगिनस्तेन देवताः ॥
स्वमात्मानं परित्यज्य तपोभिर्न च पीडयेत्।
यथासुखं सुखं धार्यं सम्बुद्धोऽयमनागतः ॥
नातिशौचं न नियमो न तपो न च दुष्करैः।
तपश्चारैर्न नियमैः सुखैर्हर्षैश्च सिद्ध्यति ॥

[ 4 ]

[3]आकाशलक्षणं सर्वम् आकाशं [ चाप्यलक्षणम् ]।
मायोपमं च [ वै ] सर्वं त्रैधातुकमशेषतः ॥
दृश्यते स्पृश्यते चैव यथा माया हि सर्वतः।
न चोपलभ्यते चैवं सर्वस्य जगतः स्थितिः।
अनया मुद्रया योगी शोधयेद् भुवनत्रयम् ॥

---

1. ज्ञानसिद्धि ( पृ० 85–87, 91 ) में उद्धृत संवरतन्त्र के उद्धरणों का संकलन 'धीः' के दूसरे अंक ( पृ० 61–62 ) में किया गया है। "न योगः" प्रभृति श्लोक वहाँ भी मिलता है, किन्तु यहाँ उसकी आनुपूर्वी भिन्न है। संवरतन्त्र से प्रायः चक्रसंवरतन्त्र का ग्रहण किया जाता है। यहाँ टिप्पणीकार का कहना है कि भोट अनुवाद में ये वचन सम्पुटतन्त्र के नाम से अनूदित हैं। तंजुर-कंजूर की उपर्युक्त सूची में 373 संख्या पर श्रीमहासंवरोदय तन्त्रराज मिलता है।
2. त० सि०, पृ० 6; यह श्लोक पृ० 11 पर परमाद्य के नाम से उद्धृत है।
3. त० सि०, पृ० 8; टिप्पणीकार का कहना है कि भोट अनुवाद में ये वचन सम्पुटतन्त्र के नाम से अनूदित हैं।

[ 5 ]

[1]सर्वंयोगो हि भगवान् वज्रसत्वस्तथागतः ।
तस्योपभोग्यं [ वै ] सर्वं त्रैधातुकमशेषतः ॥

[ 6 ]

[2]यद्यदिन्द्रियमार्गत्वं यातं तत्तत् स्वभावतः ।
असमाहितयोगेन सर्वं बुद्धमयं भवेत् ॥

●

1. त० सि०, पृ० 28
2. त० सि०, पृ० 28

# बौद्ध पारिभाषिक शब्दों का अभिप्राय

—व्रजवल्लभ द्विवेदी, ठिनलेराम शाशनी—

[ इस योजना के स्वरूप पर 'धीः' के प्रथम अंक में प्रकाश डाला जा चुका है। पिछले सात अंकों में अनेक ग्रन्थों से विशिष्ट पारिभाषिक शब्दों की व्याख्याएँ संकलित की गई हैं। अब प्रस्तुत अंक में दुर्लभ बौद्ध ग्रन्थ शोध योजना से प्रकाशित हो रहे दुर्लभ बौद्ध ग्रन्थमाला के तृतीय पुष्प के रूप में प्रख्यात होने वाले ग्रन्थ वसन्ततिलक और उसकी टीका से इस प्रकार की परिभाषाओं का संग्रह किया जा रहा है। ]

**अकारः**

एषां मध्ये तु किञ्जल्के विद्यते परमेश्वरः।
अष्टाभिर्वर्गकैश्चैव वेष्टितः परमाक्षरः॥
अकारः सर्ववर्णाग्र्यो महार्थो वर्गनायकः।
अत एव समुद्भूताः सर्वमन्त्रास्तु देहिनाम्॥

( व० ति०, पृ० 73–75 )

वर्गाष्टकसहितालिकालिमध्यवर्ती भगवानकारो निःशेषवर्णपदवाक्यमहावाक्यादिरूपेणावस्थितः। तत एवैते वर्णाः प्रादुर्भवन्ति। ते च पदानि जनयन्ति, तान्यपि वाक्यानि, तान्यपि महावाक्यानि यावल्लौकिकभावभेदमनन्तं चतुरशीतिधर्मस्कन्धसहस्राणीति सर्वोऽयं वर्णाद्यप्रभव इति। ( व० ति० टी०, पृ० 71 )

चतुर्दशविद्यास्थानानि परनिकायप्रसिद्ध्या, स्वनिकायप्रसिद्ध्या तु पञ्चविद्यास्थानान्याश्रित्य वर्ततेऽकारः। ( व० ति० टी०, पृ० 72 )

अष्टभिर्वर्गैर्वेष्टितोऽसौ परमाक्षरोऽकार एव समस्तमन्त्रहेतुः। ( व० ति० टी०, पृ० 73 )

खड्गाञ्जनादयोऽष्टौ महासिद्धयः, अन्या अपि दिव्यचक्षुरादिलक्षणा अणिमादयो वा कायैश्वर्यादयो वा लौकिकलोकोत्तराः सिद्धयः, ता सर्वा वर्गाष्टकभूषितात् प्रथमस्वरादेवोद्भवन्ति।

( व० ति० टी०, पृ० 74–75)

**अक्षोभ्यः**

रागादिभिरक्षोभ्यः स एव। ( व० ति० टी०, पृ० 85 )

**अग्निमण्डलम्**

स्थितस्त्रिकटिदेशे तु त्रिकोणे ज्वलनस्तथा। ( व०ति०, पृ० 61 )

**अङ्कुरिकः**

कक्षाभ्यां चक्षुरङ्कुरजननादङ्कुरिकः। ( व० ति० टी०, पृ० 49 )

**अचला**

ऊरुजङ्घे उपमेलापकम्, पूर्वोक्तयोरपि मीलनात्। सैवाचला, तद्योगस्यानिवार्यत्वात्।

(व० ति० टी०, पृ० 28)

**अभिमुखी**

हृदयमेढ्रे उपछन्दोहः, अर्थावगतौ भोज्यपाके तद्वैमुख्यात्। सैवाभिमुखी, तदवधौ पाके चाभिमुख्यात्। (व० ति० टी०, पृ० 28)

**अभेद्या**

नखदन्तानामभेद्यानां प्रसवनादभेद्या शिरसि। (व० ति० टी०, पृ० 44)

**अमिताभः**

भ्रूमध्ये स्थित्वाऽपरिमितास्थिमालाप्रवर्तकत्वात्तन्मयोऽमिताभः। (व० ति० टी०, पृ० 48)

ज्ञानमय्योऽपरिमिता भासो यस्य सोऽयममिताभः। (व० ति० टी०, पृ० 85)

**अमोघसिद्धिः**

सत्त्वार्थक्रियायां सकला सिद्धिर्यतः सोऽमोघसिद्धिः। (व० ति० टी०, पृ० 85)

**अर्चिष्मती**

नाभिनासाग्रे उपक्षेत्रम्, बिन्दुसिङ्घानवाहित्वात्। सैवार्चिष्मती, ज्ञानाग्निप्रकाशकत्वात्।

(व० ति० टी०, पृ० 28)

**अर्बुदः**

आभ्यां स्वरव्यञ्जनदूतीभ्यां मुद्रात्रयसमापत्त्या कर्ममारुतेश्वरदण्डभेदादविकल्पसुखानुभवो बुध्यत इत्यर्बुदः पृष्ठं शिरसः। (व० ति० टी०, पृ० 31)

अर्बुदः पृष्ठदेशस्तु। (व० ति०, पृ० 32)

अर्बुदे तु महानासा डाकिनी पिशिताशिनी। (व० ति०, पृ० 42)

**अवधूती**

नाभिमध्ये महाचक्रं षोडशैस्तन्तुसूत्रितम्।
अकारेण समायुक्तं संपुटीकारयोगतः॥
सर्वाधारस्वरूपेण तत्र मध्ये व्यवस्थिता।
स्तम्भभूता महाराज्ञी साऽवधूतीति कीर्तिता॥

(व० ति० टी०, पृ० 20)

एवं वज्रवाराहीस्वभावया मध्यनाड्याऽवधूत्या एव सर्वोऽयं नाडीसंचयः प्रादुर्भूय तत्रैव समवशरणं गच्छति । ( व० ति० टी०, पृ० 58 )

**अशैक्षमार्गः**

कतमोऽशैक्षमार्गः ? मार्गज्ञानानामन्त्यस्यान्त्यः क्षणः । ( व० ति० टी०, पृ० 51 )

**अष्टसिद्धयः**

खड्गचक्ररत्नवज्रपद्मविद्याधरसिद्धयः पञ्च, खड्गस्योपलक्षणत्वात् । यया नष्टच्छायो भवति, साऽञ्जनसिद्धिर्द्वितीया । यया क्षणमात्रेण योजनशतसहस्राण्याक्रामति, सा पादलेपसिद्धिस्तृतीया । यया भूगतनिधानानि पश्यति,'बिलद्वारं प्रविश्यासुरकन्यका आकर्षयति वा, सा पातालसिद्धिश्चतुर्थी । यया मनोरमतरवपुषो यक्षिणीर्भुङ्क्ते, सा यक्षाङ्गनासिद्धिः पञ्चमी । यया मुखक्षिप्तया सर्वबुद्धक्षेत्राण्यटित्वा बुद्धेभ्यो धर्मं शृणोति, सा गुलि(टि)कासिद्धिः षष्ठी । यया शान्त्यादीन्यष्टौ कर्माणि साधयति, सा त्रैलोक्योदरवासिनी सिद्धिः सप्तमी । यया पाषाणताम्रादीन् सुवर्ण( र्णी )करोति, सा सूतकसिद्धिरष्टमीत्यष्टौ महासिद्धयः । ( व० ति० टी०, पृ० 74 )

**आकाशगर्भः**

जङ्घाभ्यां रोमकूपशुषिरव्यापकस्वेदप्रवर्तकत्वाद् आकाशगर्भः । ( व० ति० टी०, पृ० 49 )

**आचार्यः**

आचार्यश्चित्तराजस्तु मण्डलाध्यक्षरूपतः । ( व० ति०, पृ० 69 )

योऽयं चित्तवज्रधरः स्वसंवेद्यस्वरूपत्वेन प्रागुक्तमण्डलान्यभेदेन बुध्यते स एवाचार्यः, सविशेषाचरणादाचार्य इत्युच्यते । ( व० ति० टी०, पृ० 68-69 )

**आर्याष्टाङ्गमार्गः**

तत्र भावनामार्गे ज्ञेयावरणं निःस्वभावमिति या धीः सा सम्यग्दृष्टिः, परलोकास्तित्वदृष्टिश्च । तद्दृष्ट्यलब्धोऽपि नैरात्म्यालम्बनः सम्यक्संकल्पः । स्वदृष्टार्थप्रकाशिका सत्त्वेभ्यो देशना सम्यग्वाक् । एकान्तशुभं कायकर्मान्तः, ऋद्ध्यादिभिर्विनयनार्थं परेषां त्रासनं वा सम्यक्कर्मान्तः । ध्यानाहारित्वमात्रया चीवराद्यन्वेषणं सम्यगाजीवः । सर्वेर्यापथेषु स्वचित्तकायवाक्चित्तव्यापारनियोजनं सम्यग्व्यायामः ।''''भावनामार्गे आलम्बनासंप्रमोषः सम्यक्स्मृतिः । तदेकाग्रचित्तमचलितवज्रोपमसमाधिः, समन्तप्रतिभासाया भूमेर्यदन्तरं प्रादुर्भवति ।

( व० ति० टी०, पृ० 56)

**उलूकास्या**

सम्यगाजीव उलूकास्या । ( व० ति०, पृ० 56 )

**ऊष्मा**

उदरे जठराग्नेस्तद्वाहित्वादूष्मा कण्ठे। (व० ति० टी०, पृ० 45)

**ऋद्धिपादाः**

चत्वार ऋद्धिपादाः—छन्द-ऋद्धिपादः, वीर्य-ऋद्धिपादः, मीमांसा-ऋद्धिपादः, चित्त-ऋद्धि-पादश्चेति। छन्दसमाधिप्रहाणेयः संस्कारसमन्वागत ऋद्धिपादः। वीर्यसमाधिप्रहाणेयः संस्कारसमन्वित ऋद्धिपादः। मीमांसासमाधिप्रहाणेयः संस्कारसमन्वित ऋद्धिपादः। चित्त-समाधिप्रहाणेयः संस्कारसमन्वित ऋद्धिपादः। (व० ति० टी०, पृ० 53)

विवेकनिश्रितो विरागनिश्रितो निरोधनिश्रितो व्यवसर्गपरिणतश्च संस्कृतवस्तुविसंयोगाद् द्रव्यसर्गतत्प्रहाणे समन्वागत ऋद्धिपाद इति पञ्चाङ्गः। संपिण्ड्य विंशतिप्रकाराश्चत्वार ऋद्धिपादाः। (व० ति० टी०, पृ० 54)

अर्द्धनमृद्धिः, 'ऋधु वृद्धौ' इति धातुपारायणे पाठात्। ततश्च सर्व एव दशबलवैशारद्यादयो बुद्धगुणा यस्यां वृद्धिमुपयान्ति, सर्द्धिः सम्यक्संबोधिः, तस्याः पादा इव पादाः प्राप्तिहेतव इति ऋद्धिपादाः। (व० ति० टी०, पृ० 54)

**ऐरावती**

ऐरावती ऐरावत इव वेगवाहिनी। (व० ति० टी०, पृ० 41)

प्रज्ञेन्द्रियमैरावती। (व० ति०, पृ० 54)

**ओडियानः**

ओडियानस्तथा चैष दक्षिणकर्ण उच्यते। (व० ति०, पृ० 31)

सव्यकर्णमार्गेण चण्डाल्या ओड्याख्ये खेचरवृत्त्या यानं बहिर्निर्गमनं तत्र उड्डियानं च दक्षिणकर्णः। (व० ति० टी०, पृ० 31)

ओडियाने महापीठे प्रभावती व्यवस्थिता।
दक्षिणकर्णमाश्रित्य स्थिता त्वङ्मलधारिणी॥ (व० ति०, पृ० 42)

**ओड्रम्**

स्तनावोड्रः प्रकीर्तितः। (व० ति०, पृ० 33)

ओडयोर्ध्वगमनेन राति स्वीकरोति चण्डालोति ओड्रं स्तनद्वयम्। (व० ति० टी०, पृ० 33)

ओड्रे पित्तवहा नाडी महाभैरविका स्मृता। (व० ति०, पृ० 44)

**कङ्कालः**

कर्णमूलं प्राप्य त्वङ्मलं प्रेरयतीति कङ्कालः। (व० ति० टी०, पृ० 48)

कङ्कालदण्डरूपो हि सुमेरुर्गिरिराट् तथा। (व० ति०, पृ० 62)

**कलिङ्गम्**

कलिङ्गस्तु मुखं प्रोक्तम् । ( व० ति०, पृ० 33 )

कं सुखं लिङ्गयति गमयतीति कलिङ्गं ( मुखम् ), सेवाकाले तद्दर्शनादेवानन्दोत्पत्तेः । ( व० ति० टी०, पृ० 33 )

श्यामादेवी कलिङ्गे तु पार्श्वतस्तु समाश्रिता । ( व० ति०, पृ० 45 )

**काकास्या**

सम्यक् कर्मान्तः काकास्या । ( व० ति०, पृ० 56 )

**काञ्ची**

हृदयं काञ्चिरुच्यते । ( व० ति०, पृ० 33 )

कं सुखमञ्चति गच्छति धावति, कदलीपुष्पसंकाशलम्बमानाधोमुखस्रवदमृतबिन्दु-हूँकाराकारमारदारिकानालिकासमन्वागतत्वाद् हृदयम् । ( व० ति० टी०, पृ० 34 )

हयकर्णा तु काञ्चीस्था विष्ठां वहति सर्वदा । ( व० ति०, पृ० 45 )

**कात्यायनी**

सिङ्घाणकस्यात्ययनाद्यावत् कात्यायनी जानुद्वये । ( व० ति० टी०, पृ० 46 )

**कामरूपः**

कामरूपो मतः कक्षौ । ( व० ति०, पृ० 33 )

कामं रूपमभिलषणीयं दर्शनं यस्य स कामरूपः कक्षद्वयम् । ( व० ति० टी०, पृ० 33 )

चक्षुर्वहति या नाडी कामरूपे व्यवस्थिता ।
ऐरावतीति विख्याता रूपदर्शनभाविता ॥ ( व० ति०, पृ० 44)

**कायचक्रम्**

मेलापकोपमेलापकश्मशानोपश्मशानाख्येष्वष्टौ नाड्यः पातालवासिन्यः कायचक्रे । ( व० ति० टी०, पृ० 46 )

कायचक्रे तु डाकिन्यो बाह्याः पातालवासिकाः । ( व० ति०, पृ० 48 )

**कायद्वारम्**

एकस्तम्भं नवद्वारं स्थूलं पञ्चाधिदैवतम् ।
नवस्रोतोगतं द्वारं नवद्वारं प्रकीर्तितम् ॥
अधमं कायिकं द्वारं स्थूलं दैवतनिर्मितम् । ( व० ति०, पृ० 19–20)

तस्मिन् ( कायद्वारे ) चक्षुरादिनाड्योऽष्टौ दक्षिणेषु चक्षुःश्रोत्रघ्राणेषु वामेषु च,

वक्त्रगुदयोश्च तन्नाम्ना प्रसिद्धा एव समयचक्रस्था ज्ञातव्याः, विषयोपभोगलक्षण-समयस्यानुष्ठानात्। ( व० ति० टी०, पृ० 46 )

**कायानुस्मृत्युपस्थानम्**

......उभयधर्मरहितत्वाच्छून्योऽयं काय इति याऽनुस्मृतिस्तस्या उप समीपे चित्तस्य स्थानं कायानुस्मृत्युपस्थानम्। ( व० ति० टी०, पृ० 52 )

**कुण्डम्**

कुण्डं च नाभिमण्डलम्। ( व० ति०, पृ० 67 )

निर्माणचक्रे नाभिमण्डलं वह्निकुण्डम्, तत्र हविषः पातात्। ( व० ति० टी०, पृ० 67 )

**कुलता**

कुलता जानुरुच्यते। ( व० ति०, पृ० 35 )

कुविकल्पानां लवनात् कुलता जानुनी। ( व० ति० टी०, पृ० 35 )

कुलतायां महावीर्या बालसिंहानवाहिनी। ( व० ति०, पृ० 48 )

**कूर्मजा**

कूर्मपृष्ठमिवाभेद्यमित्यस्थिमालावहनात् कूर्मजा भ्रूमध्ये। ( व० ति० टी०, पृ० 44 )

**कोशलम्**

कोशलो नासिकाग्रं तु। ( व० ति०, पृ० 33 )

कोशलं सिङ्घानं शलति वहति यस्मात् तत्कोशलं नासिकाग्रम्। ( व० ति० टी०, पृ० 33 )

अन्त्रमालाकुला दिव्या सुराभक्षी तु कोशले। ( व० ति०, पृ० 44 )

**खगानना**

खगमुखाकारत्वात् खगानना। ( व० ति० टी०, पृ० 48 )

वीर्यसम्बोध्यङ्गं खगानना। ( व० ति०, पृ० 55 )

**खण्डकपाली**

खण्डं शिरस्थं बोधिचित्तं नखदशनरूपेण [क]लयति प्रेरयतीति खण्डकपाली।

( व० ति० टी०, पृ० 48 )

**खण्डरोहा**

तेजआकाशे खण्डयति गच्छतीति खण्डम्, तद्विशुद्धया तत्रैव रोहतीति खण्डरोहा।

( व० ति० टी०, पृ० 41 )

आदौ तथागतलोचनादीन् खण्डयति पुनरारोहयति जनयतीति खण्डरोहा।

( व० ति० टी०, पृ० 48 )

धर्मानुस्मृत्युपस्थानं खण्डरोहा। ( व० ति०, पृ० 51 )

प्रश्रब्धिसंबोध्यङ्गं खण्डरोहा। ( व० ति०, पृ० 55 )

**खर्वरी**

खरा चासौ त्रिचक्रदाहाद् वरा चासौ पुनस्तदाप्यायनादिति खर्वरी।

( व० ति० टी०, पृ० 47 )

वीर्येन्द्रियं खर्वरी। ( व० ति०, पृ० 54 )

**खेचर्यः**

पुल्लीरादारभ्य मालवान्तं या नाड्यस्ताः खेचर्यः। ( व० ति० टी०, पृ० 27 )

**गृहदेवता**

गुदं तु गृहदेवता। ( व० ति०, पृ० 34 )

गृहस्य शरीरस्य देवता वैरोचनो गृहदेवता विड्धातुः, तदाधारत्वाद् गृहदेवता गुदद्वारम्।

( व० ति० टी०, पृ० 34 )

पूयं वहति सा नित्यं गृहदेवतसंस्थिता।
खण्डरोहेति विख्याता डाकिनी परमेश्वरी॥ ( व० ति०, पृ० 46 )

**गोदावरी**

गोदावरी तथा ज्ञेया वामकर्णस्वरूपिका। ( व० ति०, पृ० 32 )

गां भुवं भूस्वभावं निर्माणचक्रं वरत इति गोदाऽवधूती, तया व्रियते च्छाद्यत इति गोदावरी वामकर्णः। ( व० ति० टी०, पृ० 32 )

महोरुस्था तु या नाडी गोदावर्यां व्यवस्थिता।
वीरमतीति विख्याता स्थिता सा दृढरूपतः॥

( व० ति०, पृ० 42 )

**घुणः**

रागादिक्लेशजालस्य पलालस्यै(स्ये)व भक्षणात् स एव घुणः। ( व० ति० टी, पृ० 83 )

**चक्रवर्तिनी**

चक्रेषु वर्तितुं शीलं यस्याः सा चक्रवर्तिनी। ( व० ति० टी०, पृ० 48 )

सम्यक्संकल्पश्चक्रवर्तिनी। ( व० ति०, पृ० 56 )

**चक्रवर्मिणी**

चक्राण्येव वर्म सन्नाहोऽस्याः सा चक्रवर्मिणी। ( व० ति० टी०, पृ० 48 )

स्मृतिसम्बोध्यङ्गं चक्रवर्मिणी। ( व० ति०, पृ० 55 )

**चक्रवेगा**

चक्रवच्चक्रेषु वेगोऽस्या गमनागमन इति चक्रवेगा। ( व० ति० टी०, पृ० 48 )

प्रीतिसम्बोध्यङ्गं चक्रवेगा। ( व० ति०, पृ० 55 )

**चण्डाक्षी**

चण्डे तीक्ष्णे दाहके वामेतरे नाड्यावस्या इति चण्डाक्षी, मध्यमया द्वयोः प्रकाशनात्।

( व० ति० टी०, पृ० 46 )

वीर्यद्धर्युत्पादश्चण्डाक्षी। ( व० ति०, पृ० 53 )

**चन्द्रनाडी [ ललना ]**

कण्ठादारभ्य वामेन नाडी संभोगकायिकी।
नाभिमध्ये तु विश्रान्ता अधोमुखी मदावहा॥

( व० ति०, पृ० 80 )

येयं वामपार्श्वे ललनाख्या नाडी, साऽधोमुखी कण्ठादारभ्य नाभिमध्यं यावन्मदं वहति।

( व० ति० टी०, पृ० 80 )

मदश्चन्द्र इति ख्यातः। ( व० ति०, पृ० 80 )

**चन्द्रमण्डलम्**

स्वरव्यञ्जनसंभूतं द्वात्रिंशद्बोधिमानसम्।
पद्ममध्यगतं यत्तच्चन्द्रमण्डलमुच्यते॥

( व० ति०, पृ० 62 )

तदन्तरालिकालिस्वरव्यञ्जनात्मद्वात्रिंशद्बोधिचित्तपिण्डितमस्तुलुङ्गमेव चन्द्रमण्डलं भगवतो विशेषासनम्। ( व० ति० टी०, पृ० 62 )

**चन्द्रसूर्यौ**

चन्द्रसूर्यौ तु विख्यातौ पार्श्वे तु वामदक्षिणे।

( व० ति०, पृ० 79 )

वामदक्षिणयोश्चक्राणां चन्द्रसूर्यौ प्राणापानादूर्ध्वमधः शुक्ररक्तधातू प्रवहन्त्यौ ललनारसने स्थिते ज्ञेये। एतेन बहिश्चन्द्रसूर्यप्रकाश आध्यात्मिक एवेति कथितं भवति।

( व० ति० टी०, पृ० 79 )

द्वारद्वयसमारूढौ अधऊर्ध्वसमाश्रितौ।
एतौ हि चन्द्रसूर्याख्यौ नाडीद्वयं प्रकीर्तितौ॥

वक्त्रगुदयोश्च तन्नाम्ना प्रसिद्धा एव समयचक्रस्था ज्ञातव्याः, विषयोपभोगलक्षण-समयस्यानुष्ठानात्। ( व० ति० टी०, पृ० 46 )

**कायानुस्मृत्युपस्थानम्**

......उभयधर्मरहितत्वाच्छून्योऽयं काय इति याऽनुस्मृतिस्तस्या उप समीपे चित्तस्य स्थानं कायानुस्मृत्युपस्थानम्। ( व० ति० टी०, पृ० 52 )

**कुण्डम्**

कुण्डं च नाभिमण्डलम्। ( व० ति०, पृ० 67 )

निर्माणचक्रे नाभिमण्डलं वह्निकुण्डम्, तत्र हविषः पातात्। ( व० ति० टी०, पृ० 67 )

**कुलता**

कुलता जानुरुच्यते। ( व० ति०, पृ० 35 )

कुविकल्पानां लवनात् कुलता जानुनी। ( व० ति० टी०, पृ० 35 )

कुलतायां महावीर्या बालसिंहानवाहिनो। ( व० ति०, पृ० 48 )

**कूर्मजा**

कूर्मपृष्ठमिवाभेद्यमित्यस्थिमालावहनात् कूर्मजा भ्रूमध्ये। ( व० ति० टी०, पृ० 44 )

**कोशलम्**

कोशलो नासिकाग्रं तु। ( व० ति०, पृ० 33 )

कोशलं सिङ्घानं शलति वहति यस्मात् तत्कोशलं नासिकाग्रम्। ( व० ति० टी०, पृ० 33 )

अन्त्रमालाकुला दिव्या सुराभक्षी तु कोशले। ( व० ति०, पृ० 44 )

**खगानना**

खगमुखाकारत्वात् खगानना। ( व० ति० टी०, पृ० 48 )

वीर्यसम्बोध्यङ्गं खगानना। ( व० ति०, पृ० 55 )

**खण्डकपाली**

खण्डं शिरस्थं बोधिचित्तं नखदशनरूपेण [क]लयति प्रेरयतीति खण्डकपाली।

( व० ति० टी०, पृ० 48 )

**खण्डरोहा**

तेजआकाशे खण्डयति गच्छतीति खण्डम्, तद्विशुद्धया तत्रैव रोहतीति खण्डरोहा।

( व० ति० टी०, पृ० 41 )

आदौ तथागतलोचनादीन् खण्डयति पुनरारोहयति जनयतीति खण्डरोहा।

( व० ति० टी०, पृ० 48 )

धर्मानुस्मृत्युपस्थानं खण्डरोहा। ( व० ति०, पृ० 51 )
प्रश्रब्धिसंबोध्यङ्गं खण्डरोहा। ( व० ति०, पृ० 55 )

**खर्वरी**

खरा चासौ त्रिचक्रदाहाद् वरा चासौ पुनस्तदाप्यायनादिति खर्वरी।
( व० ति० टी०, पृ० 47 )

वीर्येन्द्रियं खर्वरी। ( व० ति०, पृ० 54 )

**खेचर्यः**

पुल्लीरादारभ्य मालवान्तं या नाड्यस्ताः खेचर्यः। ( व० ति० टी०, पृ० 27 )

**गृहदेवता**

गुदं तु गृहदेवता। ( व० ति०, पृ० 34 )
गृहस्य शरीरस्य देवता वैरोचनो गृहदेवता विड्धातुः, तदाधारत्वाद् गृहदेवता गुदद्वारम्।
( व० ति० टी०, पृ० 34 )

पूयं वहति सा नित्यं गृहदेवतसंस्थिता।
खण्डरोहेति विख्याता डाकिनी परमेश्वरी॥ ( व० ति०, पृ० 46 )

**गोदावरी**

गोदावरी तथा ज्ञेया वामकर्णस्वरूपिका। ( व० ति०, पृ० 32 )
गां भुवं भूस्वभावं निर्माणचक्रं वरत इति गोदाऽवधूती, तया व्रियते च्छाद्यत इति गोदावरी वामकर्णः। ( व० ति० टी०, पृ० 32 )

महोरुस्था तु या नाडी गोदावर्यां व्यवस्थिता।
वीरमतीति विख्याता स्थिता सा दृढरूपतः॥
( व० ति०, पृ० 42 )

**घुणः**

रागादिक्लेशजालस्य पलालस्यै(स्ये)व भक्षणात् स एव घुणः। ( व० ति० टी, पृ० 83 )

**चक्रवर्तिनी**

चक्रेषु वर्तितुं शीलं यस्याः सा चक्रवर्तिनी। ( व० ति० टी०, पृ० 48 )
सम्यक्संकल्पश्चक्रवर्तिनी। ( व० ति०, पृ० 56 )

**चक्रवर्मिणी**

चक्राण्येव वर्म सन्नाहोऽस्याः सा चक्रवर्मिणी। ( व० ति० टी०, पृ० 48 )

स्मृतिसम्बोध्यङ्गं चक्रवर्मिणी। ( व० ति०, पृ० 55 )

**चक्रवेगा**

चक्रवच्चक्रेषु वेगोऽस्या गमनागमन इति चक्रवेगा। ( व० ति० टी०, पृ० 48 )

प्रीतिसम्बोध्यङ्गं चक्रवेगा। ( व० ति०, पृ० 55 )

**चण्डाक्षी**

चण्डे तीक्ष्णे दाहके वामेतरे नाड्यावस्या इति चण्डाक्षी, मध्यमया द्वयोः प्रकाशनात्।

( व० ति० टी०, पृ० 46 )

वीर्यद्धर्युत्पादश्चण्डाक्षी। ( व० ति०, पृ० 53 )

**चन्द्रनाडी [ ललना ]**

कण्ठादारभ्य वामेन नाडी संभोगकायिकी।
नाभिमध्ये तु विश्रान्ता अधोमुखी मदावहा॥

( व० ति०, पृ० 80 )

येयं वामपार्श्वे ललनाख्या नाडी, साऽधोमुखी कण्ठादारभ्य नाभिमध्यं यावन्मदं वहति।

( व० ति० टी०, पृ० 80 )

मदश्चन्द्र इति ख्यातः। ( व० ति०, पृ० 80 )

**चन्द्रमण्डलम्**

स्वरव्यञ्जनसंभूतं द्वात्रिंशद्बोधिमानसम्।
पद्ममध्यगतं यत्तच्चन्द्रमण्डलमुच्यते॥

( व० ति०, पृ० 62 )

तदन्तरालिकालिस्वरव्यञ्जनात्मद्वात्रिंशद्बोधिचित्तपिण्डितमस्तुलुङ्गमेव चन्द्रमण्डलं भगवतो विशेषासनम्। ( व० ति० टी०, पृ० 62 )

**चन्द्रसूर्यौ**

चन्द्रसूर्यौ तु विख्यातौ पार्श्वे तु वामदक्षिणे।

( व० ति०, पृ० 79 )

वामदक्षिणयोश्चक्राणां चन्द्रसूर्यौ प्राणापानादूर्ध्वमधः शुक्ररक्तधातू प्रवहन्त्यौ ललनारसने स्थिते ज्ञेये। एतेन बहिश्चन्द्रसूर्यप्रकाश आध्यात्मिक एवेति कथितं भवति।

( व० ति० टी०, पृ० 79 )

द्वारद्वयसमारूढौ अधऊर्ध्वसमाश्रितौ।
एतौ हि चन्द्रसूर्याख्यौ नाडीद्वयं प्रकीर्तितौ॥

वीराणां डाकिनीनां तु गत्यागतिनिबन्धनौ।
अस्तमनोदयार्थौ तु स्वप्नप्रबोधयोः स्थितौ॥

( व० ति०, पृ० 80–81 )

**चित्तचक्रम्**

चत्वारः पीठसंज्ञकाः।·······इत्येवमुपपीठास्तु चित्तचक्रे व्यवस्थिताः। खेचरीणां समाख्याताः स्थानविशेषरूपिणः॥ ( व० ति०, पृ० 32 )

चित्तचक्रे तु खेचर्यः पीठोपपीठसंस्थिताः। ( व० ति०, पृ० 43 )

एताः पीठोपपीठेष्वष्टौ नाड्यः खेचर्यः सोपायाश्चित्तचक्रे। ( व० ति० टी०, पृ० 44 )

**चित्तानुस्मृत्युपस्थानम्**

ज्ञेयात् पूर्वं पश्चात् सहभावित्वासिद्धेश्चित्तं शून्यमिति यत् स्मृतेरुपस्थानं चित्तानुस्मृत्युपस्थानम्। ( व० ति० टी०, पृ० 52 )

**जापः**

जाप आवर्तनं भवेत्। ( व० ति०, पृ० 68 )

तस्यैव ( मन्त्रस्यैव ) प्रवेशादिक्रमेण यदावर्तनं स जाप उच्यते। एतेन प्रकृतिजापोऽयं सर्वलोकसाधारण उक्तः। उक्तं च—

ये वै त्रिधातुके सत्त्वाः प्राणायामसमाश्रिताः।
मन्त्रराजं जपन्त्यज्ञा ध्यानाध्ययनवर्जिताः॥ ( व० ति० टी०, पृ० 63 )

**जालन्धरम्**

शिखा जालन्धरस्तथा। ( व० ति०, पृ० 31 )

नाडीजालस्य मूलं तद्धारणे जालन्धरं शिखा। ( व० ति० टी०, पृ० 31 )

जालन्धरे तु चण्डाक्षी केशरोमवहा तथा। ( व० ति०, पृ० 42 )

**डाकिनी**

तत्र पृथिव्याकाशे डयनाद् डाकिनी। ( व० ति० टी०, पृ० 41 )

सर्वा एव डाकिन्यो वाराहीकुलसंभवाः। ( व० ति० टी, पृ० 46 )

कायानुस्मृत्युपस्थानं डाकिनी। ( व० ति०, पृ० 51 )

इह निर्विकल्पनिरालम्बनिरावरणस्वभावा डाकिन्य इत्युच्यन्ते,

डै वैहायसि गमने बुद्धो धातुः प्रकल्पितः।
सर्वाकाशचरा सिद्धा डाकिनीति निगद्यते॥

पञ्चज्ञानमहानभसि चरन्त्यश्च नाड्यस्तस्मात्ता एव डाकिन्य इत्युच्यन्ते।

( व० ति० टी०, पृ० 60 )

डाकिन्यः षट्त्रिंशन्नाड्यः। ( व० ति० टी०, पृ० 67 )

**तिलका**

वडवानलरूपा तु वाराही तिलका स्मृता।
कर्ममारुतनिर्धूता ज्वलन्ती नाभिमण्डले॥
वसन्तं प्राप्य सन्तुष्टा समापत्त्या व्यवस्थिता। ( व० ति०, पृ० 38 )

ज्ञानज्वाला तु वज्रवाराही तिलकेत्युच्यते। (व० ति० टी०, पृ० 38)

**त्रिशकुनिः**

नाभिस्त्रिशकुनिर्मतः। ( व० ति०, पृ० 33 )

त्रयः शकुनयः पक्षिसदृशाः खगमुखाकाराः कायवाक्चित्तनाड्यो यत्र तत् त्रिशकुनिर्नाभिमण्डलम्। ( व० ति० टी०, पृ० 33 )

त्रिशकुनौ समुद्भूता वायुवेगा सफुफ्फुसा। ( व० ति०, पृ० 44 )

**दर्शनमार्गः**

कतमो दर्शनमार्गः ? सप्त धर्माः। कतमे सप्त ? सप्त बोध्यङ्गानि। (व० ति० टी०, पृ० 51)
क्लेशावरणप्रतिपक्षो दर्शनमार्गः। ( व० ति० टी०, पृ० 56 )

**दिव्या**

त्वङ्मलस्य बहिर्द्योतमानस्य वहनाद् दिव्या सव्यकर्णे। ( व० ति० टी०, पृ० 44 )

**दूरङ्गमा**

गुह्यगुदौ मेलापकम्, प्रज्ञोपाययोः समापत्तौ तन्मीलनान्नाड्यैक्याच्च। सैव दूरङ्गमा, तन्नाडीसौशीर्यस्य दूरत्वात्। ( व० ति० टी०, पृ० 28 )

**देवीकोट्टः**

अथ चक्षुषी देवीकोट्टः। ( व० ति०, पृ० 32 )
देव्यास्तस्या एव कोट्ट इव कोट्टो देवीकोट्टः, तदाश्रये नेत्रद्वये तत्प्राप्तेः।
( व० ति० टी०, पृ० 32 )

देवीकोट्टे तु या नाडी मृद्वी लङ्केश्वरी मता।
बुक्कं वहति या नित्यं सर्वदेहाऽधिवासिनी॥ ( व० ति०, पृ० 43 )

**दोषा**

दुष्यते या स्वविषयेण विक्रियत इति दोषा चक्षुर्धातुवहा कक्षयोः, कक्षदर्शनान्मनोविकृतेः, ममेर्यामिति द्वेषोदयाच्च। द्वेषो दोष इति पर्यायौ। ( व० ति० टी०, पृ० 44 )

**द्रुमच्छाया**

द्रुमच्छायेव शीतलाऽऽप्यायनाद् द्रुमच्छाया। (व० ति० टी०, पृ० 47)

समाधीन्द्रियं द्रुमच्छाया। (व० ति०, पृ० 54)

**धर्मकायः**

हृच्चक्रं धर्मकायः, हूङ्कारादिरूपस्कन्धधातूपसंहारकत्वात्। (व० ति० टी०, पृ० 78)

अष्टदलमहापद्मे धर्मकायः प्रवर्तते। (व० ति०, पृ० 78)

हृदयेऽपि तथा चैव पद्ममष्टदलान्वितम्॥ (व० ति०, पृ० 78)

धर्मचक्रे तु विख्यातो हूँकारोऽनाहतो मतः।
पञ्चस्वरसमायुक्तो यरलवैर्विभूषितः॥ (व० ति०, पृ० 79)

श्रीहेरुक एव धर्मकायः....स एव मन्त्रः....स एव घुणः। (व० ति० टी०, पृ० 83)

सुविशुद्धमहाज्ञानं सर्वदेवीस्वरूपकम्।
वज्रसत्त्व इति ख्यातं परं सुखमुदाहृतम्॥
स्वयम्भूरूपमेतत्तु धर्मकायं प्रकीर्तितम्। (व० ति०, पृ० 85)

प्राङ्निर्णीतः परमसुखस्वभावो हेतुप्रत्ययनिरपेक्षो यः स धर्मकाय इत्युच्यते। (व० ति०, पृ० 85)

**धर्ममेघा**

अङ्गुष्ठजानुनी उपश्मशानम्, पूर्ववत्। सैव धर्ममेघा, धर्मस्याधारणे स्थिरस्य मज्जोत्तरस्योर्ध्वस्रोतसा मेघवद्वर्षणे नीरुजो वा वृष्टियोगाद् बोधिचितकुन्दुरगतात्। (व० ति० टी०, पृ० 29)

**धर्मानुस्मृत्युपस्थानम्**

कुशलाकुशलाव्याकृतादिभेदभिन्नानां धर्माणां पूर्ववच्छून्यत्वाद् यत् स्मृतेरुपस्थानं तद्धर्मानुस्मृत्युपस्थानम्। (व० ति० टी०, पृ० 52)

**धर्माः**

ध्रियन्ते बोधिसत्त्वैर्मार्गस्थैश्चेतसि व्यवस्थाप्यन्त इति धर्माः कुशलपक्षसंगृहीताः, अनाश्रवत्वात्, मार्गसत्त्वस्यैकान्तकुशलत्वात्। (व० ति० टी०, पृ० 52)

**धर्मोदया**

त्रिकोणं मण्डलं रम्यं वज्रारल्लिविनिःसृतम्।
धर्मोदयेति विख्यातं योषितां भग इत्यपि॥ (व० ति०, पृ० 71)

**धातवः**

धातवश्चतस्रो ज्ञानदेव्यः। (व० ति० टी०, पृ० 67)

**नगरम्**

अङ्गुल्यां नगरः स्मृतः। ( व० ति०, पृ० 35 )

न गच्छन्तीति नगा अङ्गुलयः, अतः परमप्रसरणान्नगरम्। ( व० ति० टी०, पृ० 35 )

नगरे तु सुवीराख्या मेदवसावहा स्थिता। ( व० ति०, पृ० 47 )

**नाड्यः**

नवस्रोतोगता नाड्यो नवद्वारेषु संस्थिताः।
दशमी भगमध्ये तु तासां श्रेष्ठतरा परा॥
ललाटस्थानमारभ्य हंकारचक्रनिर्णयम्।
स्रवन्त्यो बोधिचित्तानि द्वात्रिंशदप्यहर्निशम्॥ ( व० ति०, पृ० 26 )

काकास्यादिस्वभावा नाड्यः। ( व० ति० टी०, पृ० 27 )

स्थानानि सर्वनाडीनां समाख्यातानि सर्वतः।
एषु स्थानेषु डाकिन्यो नाडीरूपेण संस्थिताः॥ ( व० ति०, पृ० 36 )

द्वात्रिंशतो नाडीनां नामानि श्रीहेवज्रे…………एता द्वात्रिंशत् संध्यानाडीचतुष्टयेन सह षट्त्रिंशत्। त्रिवृताद्या अवधूत्याद्याश्चाष्टौ वर्जयित्वा परिशिष्टा अभेदाद्याश्चतुर्विंशतिः प्रचण्डाद्या विज्ञेयाः। ( व० ति० टी०, पृ० 43 )

इत्येता वज्रयोगिन्यो नाडीरूपेण संस्थिताः।
चित्तचक्रस्य योगिन्यः सप्तत्रिंशदुदाहृताः।
प्रज्ञापारमिता ह्येताः शरीरे संव्यवस्थिताः॥ ( व० ति०, पृ० 50 )

सप्तत्रिंशद्बोधिपाक्षिकधर्मविशुद्धाः शरीरगताः सर्वा नाड्यो देवतावर्णभुजसंस्थानमाश्रित्य संस्थिताः। ( व० ति०, पृ० 57 )

**नादः**

तेनैव भिद्यते नादो वह्निसतोषकारिणा।
सम्पूर्णं मण्डलं तेन भवत्येव न संशयः॥ ( व० ति०, पृ० 63 )
नादो हि सर्ववर्णानां पदवाक्यप्रभेदिनाम्।
एकः कारणतां प्राप्ते नाभिदेशे व्यवस्थितः॥····
अनेनाप्यायितो नादः सन्तोषपदभाग् भवेत्।
बसन्ततिलकायोगः स एष विनिगद्यते॥ ( व० ति० टी०, पृ० 64 )
नादस्तु मन्त्र इत्युक्तः। ( व० ति०, पृ० 68 )

योऽयं प्रागुक्तो नाभिदेशादुच्चारणात् प्राणवायुः, स एव सर्वमन्त्रहेतुत्वान्मन्त्र इत्युच्यते।
( व० ति० टी०, पृ० 68)

**निर्माणकायः**

नाभिमध्ये स्थितं पद्मं चतुष्षष्टिदलान्वितम्। ( व० ति०, पृ० 78 )
चतुष्षष्टिदलं चैव निर्माणं परिकीर्तितम्। ( व० ति०, पृ० 78 )

नाभिचक्रं निर्माणकायः, बुद्धबोधिसत्त्वरूपाणां स्कन्धायतनस्वभावसर्वसत्त्वानामुत्पत्तेः। ( व० ति० टी०, पृ० 78 )

निर्माणचक्रमध्ये तु वर्गाष्टकनिवेष्टितः।
वर्णानामग्ररूपोऽसावकारः परमाक्षरः॥ ( व० ति०, पृ० 79 )
भगमध्यगतश्चासौ सर्षप इति विश्रुतः।
सूर्यरूपसमाख्यातो निर्माणकाय उच्यते॥ ( व० ति०, पृ० 82 )

**पञ्चतथागतज्ञानम्**

विचित्रज्ञेयचक्रप्रतिबिम्बितत्वात् स एवादर्शज्ञानम्। अपदादीनामेकतमत्वात् स एव समताज्ञानम्। स एव विवृतिप्रविचयात् प्रत्यवेक्षणाज्ञानम्। जगदर्थस्य तत एव प्रवृत्तेः स एव कृत्यानुष्ठानज्ञानम्। धर्मतारूपत्वाद्धर्मधातुज्ञानमसाविति। ( व० ति० टी०, पृ० 84-85 )

**पञ्चधातुडाकिन्यः**

पातनी पृथिवीधातुरब्धातुर्मारणी स्मृता॥
आकर्षण्यग्निधातुस्तु वायुर्नर्तेश्वरी मता।
आकाशधातुरुक्तस्तु पद्मज्वालिन्यनाकुला॥

( व० ति०, पृ० 16-17 )

**पञ्चमार्गाः**

संभारमार्गः, प्रयोगमार्गः, दर्शनमार्गः, भावनामार्गः, अशैक्षमार्गश्चेति पञ्चमार्गाः। ( व० ति० टी०, पृ० 51 )

एषां पञ्चानां मार्गाणां द्वाभ्यां संग्रहो वेदितव्यः। कतमाभ्यां द्वाभ्याम्? लौकिकमार्गेण लोकोत्तरमार्गेण चेति। तत्र लौकिकमार्गे कति धर्माः? द्वाविंशतिधर्माः। कतमे? स्मृत्युपस्थान-सम्यक्प्रहाण—ऋद्धिपाद-इन्द्रियबलाख्यानि। तत्र लोकोत्तरमार्गे कति धर्माः? पञ्चदश। कतमे? सप्तबोध्यङ्गानि, आर्याष्टाङ्गमार्गश्चेति। ( व० ति० टी०, पृ० 52 )

**पञ्चस्कन्धबुद्धाः**

रूपं वैरोचनो बुद्धो वज्रसूर्यस्तु वेदना।
पद्मनर्तेश्वरः संज्ञा संस्कारो वज्रराट् तथा॥
विज्ञानं वज्रसत्त्वस्तु .... ... .... .... ।

( व० ति०, पृ० 14-15 )

पञ्चस्कन्धाः समासेन पञ्चबुद्धाः प्रकीर्तिताः ।

( व० ति० टी०, पृ० 15 )

**पञ्चस्कन्धाः**

पञ्चस्कन्धा पञ्चडाकाः । ( व० ति० टी०, पृ० 67 )

**पञ्चायतनवीराः**

नेत्रं तु मोहवज्राख्यं द्वेषवज्राभिधा श्रुतिः ॥
ईर्ष्यावज्रस्तथा घ्राणं रागवज्रो मुखं स्मृतम् ।
कायो मात्सर्यवज्रस्तु पञ्चैते स्थूलदेवताः ॥

( व० ति०, पृ० 15-16 )

**पद्मनर्तेश्वरः**

पादपृष्ठात् पद्मनर्तेश्वरस्य बोधिचित्तस्याश्रवरूपस्य प्रवर्तनात् पद्मनर्तेश्वरः ।

( व० ति० टी०, पृ० 49 )

पद्मनर्तनं पद्मनर्तस्तत्रेश्वर इव प्रभवतीति पद्मनर्तेश्वरः । ( व० ति० टी०, पृ० 82 )

**पद्मप्रकाशः**

पद्मे प्रकाशते शोभत इति पद्मप्रकाशः स्वयम्भूः । ( व० ति० टी०, पृ० 82 )

**परमेश्वरः**

परमेश्वरः परमवीरयोगिनीस्वभावा वर्णास्तेषामीश्वरश्चक्रवर्ती । तथाहि—नपुंसकबीज-चतुष्टयपरिहारेणाकारादयो द्वादशवर्णा भगवान् द्वादशभुजः । दग्धबीजानि चत्वारि डाकिनी–लामा–खण्डरोहा–रूपिण्यः । कादयो हान्ता मकारबिन्दुलाञ्छतास्त्रिचक्रवीर-वीरिण्यः । यादयो हान्ता काकास्याद्याः । क्षकारः क्षयडाकः । मध्येऽकारो वज्रवाराहीति ।

( व० ति० टी०, पृ० 73 )

**पातालवासिन्यः**

प्रेतपुरीमारभ्य कुलतान्तं पातालवासिन्यः । ( व० ति० टी०, पृ० 27 )

**पावकी**

अश्रुणा मुखस्य शोकस्य वा ज्वलनात् पावकी पादपृष्ठे । ( व० ति० टी०, पृ० 46 )

**पीठानि**

पीठं चैवोपपीठं च क्षेत्रोपक्षेत्रमेव च ।
छन्दोहस्तु तथा चान्यदुपच्छन्दोहमित्यपि ॥

मेलापकस्तथा चैव उपमेलापकस्तथा ।
श्मशानोपश्मशानं च पीठादिदशभूमयः ॥ ( व० ति०, पृ० 30 )

**पुल्लीरम्**

पुल्लीरे तु प्रचण्डाख्या नखदन्तवहा स्मृता । ( व० ति०, पृ० 42 )
( अत्र पुल्लीरपदेन मलयस्य ग्रहणम् )

**पूजा**

षडायतनधातूनां स्कन्धादीनां विशेषतः ॥
देवतारूपिणां तेषां डाकिनीनां तथैव च ।
योगः पूजा समाख्याता तेन ते पूजिता यतः ॥ ( व० ति०, पृ० 67 )
निःस्वभावपदाभ्यासाद् देवतारूपभावना ।
सा मता महती पूजा सर्वबुद्धप्रसाधनी ॥ (व० ति० टी०, पृ० 07)

**पृथिवीमण्डलम्**

हृदये पृथिवी चैव चतुरस्रं समन्ततः ( व० ति०, पृ० 62 )

**प्रचण्डा**

प्रशान्तं चण्डत्वं यस्याः सा प्रचण्डा, महासुखस्थानमासाद्येति यावत् ।
( व० ति० टी०, पृ० 46 )

छन्दद्धर्युत्पादः प्रचण्डा । ( व० ति, पृ० 57 )

**प्रज्ञेन्द्रियम्**

समाधीन्द्रियोदानितान् धर्मान् भूतप्रत्यवेक्षया यद्विचारयति तत्प्रज्ञेन्द्रियम् ।
( व० ति० टी०, पृ० 54-55 )

**प्रभाकरी**

कक्षस्तनौ क्षेत्रम्, स्वेदक्षीरव्याजेन बोधिचित्तप्रसेचनात् । सैव प्रभाकरी, तदवलोकनान्मनस्यानन्दप्रभोत्पत्तेः । (व० ति० टी०, पृ० 28)

**प्रभावती**

अग्निवर्णप्रभायुक्तत्वात् प्रभावती । ( व० ति टी०, पृ० 47 )
मीमांसद्धर्युत्पादः प्रभावती । ( व० ति०, पृ० 53 )

**प्रमुदिता**

तत्र शिरःशिखादक्षिणकर्णपृष्ठानि पीठं बोधिचित्तास्पदं सैव प्रमुदिता, लयादिक्रमेणानन्दत्रयजननात् । ( व० ति० टी०, पृ० 28 )

**प्रयोगमार्गः**

कतमः प्रयोगमार्गः ? दश धर्माः । कतमे दश ? पञ्चेन्द्रियाणि पञ्चबलानि चेति ।

( व० ति० टी,० पृ० 51 )

तत्र प्रयोगमार्गे चत्वारो निर्वेधभागीया धर्माः—ऊष्मगताः, मूर्धगताः, क्षान्तिगताः, लौकिकाग्रधर्माश्चेति ।........तत्र प्रथमयोर्निर्वेधभागीययोरर्थे श्रद्धादयस्तानि पञ्चेन्द्रियाणीत्युच्यन्ते । विवर्तन्ते हि श्रद्धादयो यदा तदेन्द्रियव्यपदेशभाजिनो भवन्ति, यदा विपक्षेणाश्रद्धाकौशीद्यविस्मृतिविक्षेपायोनिशोमनसिकारपर्यायदौष्प्रज्ञेन न निवर्तन्ते, पञ्चबलानि भवन्तीति ।

( व० ति० टी०, पृ० 54-55 )

**प्रवणा**

पुरीषवाहित्वात् प्रवणा, वर्णव्यत्ययात् प्रणवा, वैरोचनप्रवाहिनी हृदये ।

( व० ति० टी०, पृ० 45 )

**प्रेतपुरी**

प्रेताधिवासिनी लिङ्गे । ( व० ति०, पृ० 34 )

प्रेतानां पञ्चानामाकाशानां पुरी इव पुरी प्रेतपुरी सा ध्वजयुगली ।

( व० ति० टी०, पृ० 34 )

प्रेताधिवासिनीसंस्था श्लेष्मला चक्रवेगिनी । ( व० ति०, पृ० 46 )

**प्रेमणी**

लोहितवहनाद्व सन्तपुष्पैः प्रेमोत्पादनात् प्रेमणी ऊर्वोः ।

( व० ति० टी०, पृ० 46 )

**बिन्दुः**

तस्य मध्ये तु हंकारो बिन्दुरूपो ह्यनाहतः ॥

....स्थितं तद्बीजरूपेण....श्रवत्यमृतरूपेण.... । ( व० ति०, पृ० 62-63 )

मस्तिष्कस्य मध्येऽनाहताक्षरो हंकारः स्रवदमृतप्रसरत्वाद् बिन्दुर्वेदनशीलो बिन्दुरित्युच्यते ।

( व० ति० टी०, पृ० 63 )

बिन्दुरिन्दुस्वरूपेण जगदाह्लादकारकः ।

महासुखे महाचक्रेऽनाहताक्षररूपधृक् ॥ ( व० ति०, पृ० 64 )

**बुद्धत्वम्**

स्वरूपावबोधाद् बुद्धस्तस्य भावो बुद्धत्वम्, तत् स्वदेह एव स्थितं व्यवस्थितम् । अत एव तदेव बुद्धक्षेत्रम्, अत्रैव प्रकृतिसिद्धस्य सहजबुद्धस्यावस्थानम् । ( व० ति० टी०, पृ० 29 )

**बोधिः**

स्वरूपपरिज्ञानमेव बोधिः । ( व० ति० टी०, पृ० 29 )

बुद्धयन्त्यनया सर्वमात्मस्वरूपमिति बोधिः ।........पुद्गलनैरात्म्यलक्षणा बोधिः श्रावकबोधिः प्रादेशिकी, धर्माणां द्रव्यत्वेनाभ्युपगमात् । तया विमुच्यमानाः श्रावकबोधौ निपतेयुः, सा बोधिः स्वार्थमात्रप्राधान्यादविशुद्धत्वात् प्रादेशिकीत्युच्यते । उभयनैरात्म्यलक्षणा तु बोधिः सम्यक्सम्बोधिर्व्यापकत्वाद् व्यापिका, धर्माणां तत्त्वभावेनावस्थानात् ।

( व० ति० टी०, पृ० 51-52 )

**बोध्यङ्गानि**

निरावरणं ज्ञानं बोधिः । येन सत्यदर्शनं चेतसि समाधीयते, तत् समाधिसम्बोध्यङ्गम् । येन तत्रैवोत्साहः, तद्वीर्यसम्बोध्यङ्गम् । येन तत्रैव चित्तं निःसंशयं करोति, तत् प्रीतिसम्बोध्यङ्गम् । तयैव प्रीत्या कायवाक्चित्तकर्मण्यतः क्लेशोष्मप्रहाणादतिशीतला भवति, तत् प्रस्रब्धिसम्बोध्यङ्गम् । सम्यग्भावस्वरूपपरिज्ञानं तद्धर्मप्रविचयसम्बोध्यङ्गम् । तत्रैव चैतस्यसम्प्रमोषः स्मृतिसम्बोध्यङ्गम् । समाधावासक्त्यनासक्त्योरुदासीनता उपेक्षासम्बोध्यङ्गम् । ( व० ति० टी०, पृ० 55-56 )

तस्यावबोधेरङ्गान्युपाया बोध्यङ्गानि । अङ्गान्युपायाः पक्ष्या अभिव्यक्तिकरणानीति पर्यायाः । ( व० ति० टी०, पृ० 52 )

**ब्रह्माग्निः**

कर्ममारुतनिर्धूतो ब्रह्माग्निस्त्रिकटे स्थितः ॥ ( व० ति०, पृ० 67 )

मन्थमन्थानसंयोगात् कर्मणो यत्र तद्भूतो ब्रह्माग्निस्तत्त्वमयो ज्वलनः । स त्रिकटे तदधो गुह्ये त्रिकोणे ज्वलन्नास्ते, स्वभावेनेति वाक्यशेषः । बहिरपि ब्रह्माग्निः शान्तिके शस्यते । स चारणिनिर्मथनादुद्भवतीति । ( व० ति० टी०, पृ० 67 )

**भावना**

भावना प्रतिभासस्तु मण्डलाद्वययोगतः । ( व० ति०, पृ० 68 )

बाह्ये कायवाक्चित्तान्यालम्ब्य योगिनां प्रतिभासते । अध्यात्मनि निर्माणादिचतुर्मण्डलेषु मुद्रानिकायादिप्रतिभास एव भावना । निःस्वभावतालम्बनं वा मण्डलाद्वययोगः, सैव भावना । उक्तं च—

अभावे भावना भावो भावना नैव भावना ।
इति भावो न भावः स्याद् भावनातो न लभ्यते ॥

( व० ति० टी०, पृ० 68 )

**भावनामार्गः**

कतमो भावनामार्गः ? मार्गाङ्गानि । कति मार्गाङ्गानि ? आर्याष्टाङ्गो मार्गः ।

( व० ति० टी०, पृ० 51 )

ज्ञेयावरणप्रतिपक्षो भावनामार्गः । ( व० ति० टी०, पृ० 56 )

**भाविकी**

बुक्कं भावयतीति स्रवतीति भाविकी चक्षुर्द्वये । ( व० ति० टी०, पृ० 44 )

**भूचर्यः**

कामरूपादारभ्य हिमालयान्तं भूचर्यः । ( व० ति० टी०, पृ० 27 )

**मण्डलम्**

तदेव मण्डमित्युक्तं वस्तूनां सारमुत्तमम् ।
तद् गृह्णाति लातीति शरीरं मण्डलं मतम् ॥
सप्तत्रिंशन्महानाडीचक्रं हि मण्डलं मतम् ।
बोधिचित्तं महारत्नं मण्डलं तत्त्वमण्डलम् ॥
ब्रह्मादीनां च देवानां निष्पत्तिर्मण्डलादतः ।

( व० ति० टी०, 64-66 )

सहजरूपमेतत्तु जिनानां मण्डलादिकम् । ( व० ति०, पृ० 68 )

**मन्त्रः**

नादस्तु मन्त्र इत्युक्तः । ( व० ति०, पृ० 68 )

योऽयं प्रागुक्तो नाभिदेशादुच्चारणात् प्राणवायुः, स एव सर्वमन्त्रहेतुत्वान्मन्त्र इत्युच्यते ।

( व० ति० टी०, पृ० 68 )

यः कश्चित्प्रसरो वाचां जन्तूनां प्रतिपद्यते ।
स सर्वो मन्त्ररूपो हि तस्मादेव प्रजायते ॥
नादो हि मन्त्र इत्युक्तः.....मन्त्रो वर्गेश्वरः परः । ( व० ति०, पृ० 75 )

नाभिदेशादुच्चरन् महासुखध्वनिरितरो वा नाद एव मन्त्रः, मनस्त्राणनाद् गुप्तभाषणात् ।

( व० ति० टी०, पृ० 75 )

स्वभावो मन्त्रवर्गस्य परमाक्षर एककः ।
तत्परिज्ञानमात्रेण मन्त्राः स्युः कर्मकारिणः ॥

अत एव हि नेच्छामो मन्त्रान् वर्णस्वरूपिणः।
नहि शक्तास्तृणस्यापि कुब्जीकरणहेतवः॥

(व० ति० टी०, पृ० 72)

रतिकाले समुत्पन्ने यं भाषन्ते पुरन्ध्रयः।
व्यक्ताव्यक्तस्वभावोऽसौ नादो मन्त्र इति स्मृतः॥

(व० ति० टी०, पृ० 76)

**मरुः**

अङ्गुष्ठस्तु मरुः प्रोक्तः। (व० ति०, पृ० 35)

मस्य महासुखस्य रवनाद् नदनाद् मरुः पादाङ्गुष्ठे। (व० ति० टी०, पृ० 35)

खेटं वहति या शुष्का मरौ तु चक्रवर्तिनी। (व० ति०, पृ० 47)

**मलयदेशः**

शिरो मलयदेशस्तु। (व० ति०, पृ० 31)

तत्र मलय इति महासुखस्वभावं संवृतिपरमार्थाभिन्नबोधिचित्तं लीयते यत्र स मलयः, तथाभूतो देशो मलयदेशः शिरः, तत्रैव तस्य भावात्। (व० ति० टी०, पृ० 31)

**महाकङ्कालः**

महान्तं कं शिखास्थितं सत्तदेव केशरोम कालयतीति महाकङ्कालः।

(व० ति० टी०, पृ० 48)

**महानासा**

महत्यो गुह्यहृन्मुखेषु नासिका यस्याः सा महानासा। (व० ति० टी०, पृ० 47)

चित्तद्धर्युत्पादो महानासा। (व० ति०, पृ० 53)

**महाबलः**

गुह्याच्छरीरधारणसमर्थस्य श्लेष्मणो वहनान्महाबलः। (व० ति० टी०, पृ० 49)

**महाबला**

गमनागमनयोर्महद् बलं यस्याः सा महाबला। (व० ति० टी०, पृ० 48)

सम्यग्दृष्टिर्महाबला। (व० ति०, पृ० 56)

**महाभैरवा**

तृतीयौलौ ग्रन्थिभेदान्महाभैरवा। (व० ति० टी०, पृ० 47)

श्रद्धाबलं महाभैरवी। (व० ति०, पृ० 55)

**महावीरः**

नाभेर्वज्राणां महतामपि भयङ्करफुफ्फुसप्रवर्तकत्वान्महावीरः। ( व० ति० टी०, पृ० 49 )

**महावीर्या**

महद्वीर्यमुत्थाने यस्याः सा महावीर्या। ( व० ति० टी०, पृ० 48 )

सम्यग्वाग् महावीर्या। ( व० ति०, पृ० 56 )

**मातरा**

ऊर्ध्वं फुफ्फुसवहनान्मातेव मातरा, मातरं प्रत्यभिलाषजननाच्च जगज्जननाच्च नाभौ। ( व० ति० टी०, पृ० 45 )

**मानसद्वारम्**

तृतीयं मानसं द्वारं चन्द्रसूर्यप्रभेदतः।
प्रवेशान्निर्गमाच्चैव द्वारं चैवोत्तमं भवेत्॥
प्रधानमुत्तमं द्वारमधऊर्ध्वं प्रकीर्तितम्।
अधोद्वारेण विज्ञानमूर्ध्वद्वारेण धातवः॥
वैरोचनादयो बुद्धा ऊर्ध्वद्वारे चलाः स्थिताः।
अधो व्यवस्थितिस्तेषामूर्ध्वेन तु विसर्जनम्॥

( व० ति०, पृ० 22–23 )

**मालवः**

बाहुमूलं तु मालवः। ( व० ति०, पृ० 32 )

बाह्वोरन्तर्भुजयोर्यदेतन्मूलद्वयं स्कन्धद्वयं तत्रैव मालवम्। मालानां विजातीयविकल्पानां लवनात् छेदनाद् मालव इत्युच्यते। ( व० ति० टी०, पृ० 32 )

मालवे तु द्रुमच्छाया हृदयस्था जिनेश्वरी। ( व० ति०, पृ० 43 )

**यमदंष्ट्रिणी**

उत्पन्नानामकुशलानां धर्माणां प्रहाणं यमदंष्ट्रिणी। ( व० ति०, पृ० 57 )

**यमदाढी**

अनुत्पन्नानां कुशलानां धर्माणामुत्पादनं यमदाढी। ( व० ति०, पृ० 57 )

**यमदूती**

उत्पन्नानां कुशलानां धर्माणां संरक्षणं यमदूती। ( व० ति०, पृ० 57 )

**यममथनी**

अनुत्पन्नानामकुशलानां धर्माणामनुत्पादनं यममथनी । ( व० ति०, पृ० 57 )

**योगपीठानि**

चत्वारि योगपीठानि—आत्म-पर-मन्त्र-तत्त्वपीठाख्यानि यथाक्रमं नाभिहृत्कण्ठशिरांसि। ( व० ति० टी०, पृ० 6 )

**रत्नवज्रः**

गुह्यात् पीतवर्णस्य पूयस्य प्रवर्तनाद् रत्नवज्रः । ( व० ति० टी०, पृ० 49 )

**रत्नसंभवः**

रत्नयोः संभोगनिर्माणयोः संभवोऽत इति रत्नसंभवः ( व० ति० टी०, पृ० 35 )

**राजा**

राजते सूर्यसंयोगाच्चीनपिष्टवद्विरोचत इति राजा । ( व० ति० टी, पृ० 82 )

**रामेश्वरः**

रामेश्वरस्तथा ख्यातो भ्रूमध्ये""। ( व० ति०, पृ० 32 )

रामा च रामा च ते रामे ललनारसनास्वभावे भ्रुवौ, तयोर्मध्ये ईश्वरत्वं यस्य ज्ञानार्चिषस्तद् भ्रूमध्यमित्यूर्णाकोषम् । ( व० ति० टी०, पृ० 32 )

रामेश्वरे तु या नाडी प्रसिद्धा खर्वरीति सा।
अस्थिमालाव्यवस्था हि स्थिता कठिनभावतः ॥

( व० ति०, पृ० 42-43 )

**रूपिणी**

वाय्वाकाशं रूपयति विशोधयतीति रूपिणी । ( व० ति० टी०, पृ० 41 )

चित्तानुस्मृत्युपस्थानं रूपिणी ( व० ति०, पृ० 51 )

**लङ्केश्वरी**

लङ्का शरीरपुरी, तस्यामीश्वरी स्वामिनो लङ्केश्वरी । ( व० ति० टी०, पृ० 47 )

स्मृतीन्द्रियं लङ्केश्वरी । ( व० ति०, पृ० 54 )

**लम्पाकः**

लम्पाकः कण्ठमध्यके । ( व० ति०, पृ० 33 )

लम्बिकाऽधरामृतास्वादनलम्पटा रसना, तद्योगात् लम्पाकः कण्ठः ।

( व० ति० टी०, पृ० 33 )

उदरस्था सुभद्रा वै लम्पाके परिकीर्तिता। (व० ति०, पृ० 45)

**लामा**

अध्यात्वाकाशे लसनात् लामा। (व० ति० टी०, पृ० 41)

वेदनानुस्मृत्युपस्थानं लामा। (व० ति० टी०, पृ० 51)

**वज्रजटिलः**

स्तनाभ्यां वज्रजटिलरूपस्य पित्तधातोर्जननाद् वज्रजटिलः। (व० ति० टी०, पृ० 49)

**वज्रडाकिनी**

वज्रं संवरमनाहताक्षरद्वारस्थमनाहतं खगमुखैकरसं स्रवत्सुधं दुग्धाब्धितरङ्गभङ्गान् मुञ्चन्तं डयति गच्छतीति वज्रडाकिनी। (व० ति० टी०, पृ० 7)

**वज्रदेहः**

वज्रवद् दृढो देहो यस्य बाहुमूलाद् हृदयप्रवर्तको वज्रदेहः। (व० ति० टी०, पृ० 48)

**वज्रप्रभः**

वज्ररत्नवत् प्रभा यस्य, तस्य चक्षुषि स्थित्वा बुक्कस्य प्रवर्तकत्वात् वज्रप्रभः।
(व० ति० टी०, पृ० 48)

**वज्रभद्रः**

कण्ठादुदरप्रवर्तकत्वाद् वज्रभद्रः, कण्ठोदराभ्यामादिमध्यान्तकल्याणवज्रमयधर्मचक्रप्रवर्तकत्वात्। (व० ति० टी०, पृ० 49)

**वज्रभैरवः**

हृदयात् कातरजनत्रासकपुरीषप्रवर्तकत्वाद् वज्रभैरवः (व० ति० टी०, पृ० 49)

**वज्रसत्त्वः**

जानुभ्यां चन्द्रगौरस्य सिङ्घाणस्य प्रवर्तकत्वाद् वज्रसत्त्वः। (व० ति० टी०, पृ० 49]

**वज्रहूंकारः**

नासाग्रादन्यत्र द्वारप्रवर्तकत्वाद् वज्रहूँकारः। (व० ति० टी०, पृ० 49)

**वसन्तः**

हूंकार उच्चारयितुमशक्यत्वादनाहतः, सर्वविकल्पभयेभ्यो निर्गतत्वाद्वीरः, स एव सर्वदेहिनां हृदयानन्दजनकत्वाद् वसन्त इव वसन्तो भगवान् श्रीहेरुक इति ज्ञातव्यः।
(व० ति० टी०, पृ० 37–38)

वसन्त इति विख्यातो देहिनां हृदिनन्दनः। (व० ति०, पृ० 38)

**वसन्ततिलका**

येयं वाडवाग्निसदृशो ज्ञानाग्निर्मन्थमन्थानसंयोगलक्षणकर्ममारुतोद्बोधिता नाभिदेशाज्ज्वलन्ती ऊर्ध्वमार्गेण गत्वा तं वीरं हृदयस्थं तदमृतनिर्झरधारासारेण तथैव द्रावितेन स्पृष्टा, अत एवाद्वययोगात् समापत्त्यवस्थिता वसन्ततिलकेत्युच्यते। ( व० ति० टी०, पृ० 38 )

एष श्रीहेरुको वीरो वसन्ततिलका स्मृता। ( व० ति०, पृ० 38 )

वाराहीति सुविख्याता वसन्ततिलका स्मृता। ( व० ति०, पृ० 86 )

वसन्तं हूँकारादिस्तिलकेव तिलका। ( व० ति० टी०, पृ० 86 )

**वसन्ततिलकायोगः**

अनेनाप्यायितो नादः सन्तोषपदभाग् भवेत्।
वसन्ततिलकायोगः स एष विनिगद्यते॥ ( व० ति० टी०, पृ० 64 )

**वाक्चक्रम्**

इत्येवं सर्वदेशास्तु वाक्चक्रे संव्यवस्थिताः।
भूचरीणां समाख्याताः स्थानविशेषरूपिणाम्॥ ( व० ति०, पृ० 34 )

वाक्चक्रे संस्थिता नाड्यो भूचर्यो दूतयः स्थिताः। ( व० ति०, पृ० 45 )

क्षेत्रोपक्षेत्रछन्दोहोपछन्दोहाख्येष्वष्टौ नाड्यो भूचर्यो वाक्चक्रे। ( व० ति० टी०, पृ० 45 )

**वाग्द्वारम्**

अपरं चतुर्विधं द्वारं वाचिकं मध्यमं स्मृतम्।
आग्नेयं चैव वायव्यं माहेन्द्रं वारुणं तथा॥ ( व० ति०, पृ० 20-21 )

तेभ्यः ( वाग्द्वारेभ्यः ) एव वामदक्षिणमध्यनाडीरन्ध्रयुक्तेभ्यो भगवती वर्णमातृका उदेति।
( व० ति० टी०, पृ० 21 )

पूर्वस्मिन् वाचिके द्वारे डाकिन्यश्च चतुर्विधाः। ( व० ति०, पृ० 48 )

**वामनी**

तदुदये वा वामनाकारे सत्त्वधातूत्पादात् स्नायूनां वहनाद् वामनी, तदुदये वा भुक्तस्य वमनाद् वामकर्णे। ( व० ति० टी०, पृ० 44 )

**वामा**

वामनस्यैव पूर्णस्य मांसस्य वहनाद् वामा पृष्ठे। ( व० ति० टी०, पृ० 44 )

**वायुमण्डलम्**

स्थितः पादतले वायुर्वैरम्भो धनुराकृतिः। ( व० ति०, पृ० 61 )

**वायुवेगा**

वायुवदध ऊर्ध्वं दश दिक्षु च वेगो जवो यस्याः सा वायुवेगा, ओलिद्वयेऽपि।
( व० ति० टी०, पृ० 47 )

वीर्यबलं वायुवेगा। ( व० ति०, पृ० 55 )

**वाराही**

अस्यैव सहजा प्रज्ञा स्थिता तद्रूपधारिणी ॥
कर्ममारुतनिर्धूता ज्वलन्ती नाभिमण्डले ।
वाराहीति सुविख्याता ...। (व० ति०, पृ० 86 )

वायुरेफाभ्यां मातरिश्वहुतभुग्भ्यामीरयति स्रावयतीति वाराही। (व० ति० टी०, पृ० 86 )

**वारुणमण्डलम्**

वर्तुलाकाररूपो हि वरुणस्तूदरे स्थितः। ( व० ति०, पृ० 62 )

**विकटदंष्ट्रः**

विकटा मांसमयी दंष्ट्रा पृष्ठे यस्य स तथा विकटदंष्ट्रः। ( व० ति० टी०, पृ० 48 )

**विद्यास्थानानि**

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्राणि विद्या ह्येताश्चतुर्दश ॥

इति परयूथ्यपक्षः

लक्षणं हेतुविद्या च तथैवाध्यात्मिका( की ) पुनः।
चिकित्साशिल्पविद्ये द्वे विद्यास्थानानि पञ्च तु ॥
(व० ति० टी०, पृ० 72 )

**विमला**

वामकर्णभ्रूमध्यचक्षुर्बाहुमूलमुपपीठम्, पीठसमीपम्। सैव विमला, ज्ञानाग्निना विकल्पमल-दाहात्। ( व० ति० टी०, पृ० 28 )

**वियोगा**

प्रायेण मांसभक्षणाद् वियोगा विकल्पजननाद्वा गुदे। ( व० ति० टी०, पृ० 46 )

**विरूपाक्षः**

मेढ्रात् सीमान्तस्य त्रिनेत्रस्य प्रवर्तकत्वाद् विरूपाक्षः। ( व० ति० टी०, पृ० 49 )

**विश्वपद्मम्**

तस्य मेरोः ( कङ्कालापरपर्यायस्य ) यदेतच्छिरस्तन्मध्ये या अभेद्याद्या द्वात्रिंशन्नाड्यस्ता एव विश्वपद्मं भगवत आसनं विज्ञेयम्। ( व० ति० टी०, पृ० 62 )

**विष्ठा**

पित्ताख्यं विष्ठं वहतीति विष्ठा स्तनद्वये। ( व० ति० टी०, पृ० 44 )

**वीरमती**

वीरो जनकत्वेन विद्यते यस्याः सा वीरमती, "नाभिमध्ये स्थितो वीरः" इति वचनात्।
( व० ति० टी०, पृ० 47 )

श्रद्धेन्द्रियं वीरमती। ( व० ति०, पृ० 54 )

**वीराः**

वीराश्चतुर्विंशतिधातवस्ते चन्द्रचरणाः। ( व० ति० टी०, पृ० 80 )

**वीर्येन्द्रियम्**

श्रद्धेन्द्रियोदानितान् धर्मान् उत्साहयति तद्वीर्येन्द्रियम्। तच्च चतुष्प्रकारम्—आरम्भवीर्यम्, अपरिक्रमवीर्यम्, प्रत्यवेक्षावीर्यम्, प्रतिपत्तिवीर्यं चेति। ( व० ति० टी०, पृ० 54 )

**वेदनानुस्मृत्युपस्थानम्**

वेदनापि साताद्यात्मिका षड्विज्ञानकाया तदाश्रितत्वादष्टादशधा। सापि सातादीनामतोतादिभेदेनासत्त्वात् शून्येति स्मृतेरुपस्थानं स्वचेतसीति वेदनानुस्मृत्युपस्थानम्।
( व० ति० टी०, पृ० 52 )

**वैरम्भः**

धनुराकारत्वाद्विशिष्टारम्भत्वात् स एव वैरम्भः। स्वार्थेऽण्। वैकृतवत् पादविहरणात्मिका च क्रिया वैरम्भ इत्युच्यते। ( व० ति० टी०, पृ० 61–62 )

**वैरोचनः**

अङ्गुष्ठाभ्यां श्वेतवर्णस्य खेटस्य प्रवर्तकत्वाद् वैरोचनः। ( व० ति० टी०, पृ० 49 )

स्वसंवेद्यरूपेण रोचनात् स एव वैरोचनः। ( व० ति० टी०, पृ० 85 )

**शरीरमण्डलम्**

शरीरं मण्डलं रम्यं चतुर्द्वारं यथोदितम्।

इत्यादिना

तद् गृह्णाति लातीति शरीरं मण्डलं मतम्।

इत्यादिना च विवृतं सम्पूर्णेऽष्टमे निर्देशे। ( व० ति०, पृ० 60–69 )

तत्र शरीरमेव मण्डलम्, चित्तवाक्कायमण्डलनाडीधातुरूपाणां योगिनीवीराणामाश्रयत्वात्।
( व० ति० टी०, पृ० 60–61 )

यथायं कायः पादाधस्तादुष्णीषाद्यं प्रमाणवांस्तथा प्रसारितबाहुरपि तत्प्रमाण एव ( इति देहमण्डलस्य चतुरस्रत्वं सिद्धम् )। ( व० ति० टी०, पृ० 61 )

सारस्य नाडीधातुवसन्ततिलकास्वभावडाकिनीवीरश्रीहेरुकवज्रवाराहीमयस्याधेयमण्डलस्य संग्रहात् शरीरमेव मण्डलमुच्यते। ( व० ति० टी०, पृ० 65 )

सर्वमत्रैव बोद्धव्यं मण्डलादि यथोदितम्। ( ब० ति०, पृ० 69 )

यदिहानुक्तमण्डलादीनि मण्डलोपकरणानि सूत्ररजोभूपरिग्रहावाहनस्थापनविसर्जनमण्डल-साधनाभिषेकस्नानबलिप्रभृतयस्तत्रैव देहमण्डले बोद्धव्याः, ज्ञातव्या इति यावत् । तथाहि—मध्यनाडी सूत्रम्, ''' भिषेकोऽत्र । तन्निष्यन्दानां रसनास्वादो बलिरिति ।

( ब० ति० टी०, पृ०, 69–70 )

**शर्बरी**

अन्त्रमालासु महासुखस्य स्वापनाच्छर्बरी रात्रिविकल्पजनना।च्च नासाग्रे ।

( ब० ति० टी०, पृ० 45 )

**शीतदा**

गुणवर्तिमेदोजालिकयाऽन्त्राणि परिवर्त्य तिष्ठति, तद्वाहिनी शीतदा, तस्यां शीतस्पर्श-दायित्वान्मुखे । ( ब० ति० टी०, पृ० 45 )

**शूकरास्या**

सम्यक्स्मृतिः शूकरास्या । ( ब० ति०, पृ० 56 )

**शौण्डिनी**

सुरासवक्षीबत्वात् शौण्डिनी । ( ब० ति० टी०, पृ० 48 )

धर्मप्रविचयसम्बोध्यङ्गं शौण्डिनी । ( ब० ति०, पृ० 55 )

**श्यामादेवी**

प्रेमोद्गमाच्छ्यामा चासौ सर्वचक्रेषु क्रीडनाद् देवीति श्यामादेवी ।

( ब० ति० टी०, पृ० 47 )

समाधिबलं श्यामादेवी । ( ब० ति०, पृ० 55 )

**श्रद्धेन्द्रियम्**

श्रद्धा भाविनि लोकोत्तरमार्गे स[त्य]रत्नत्रयादौ वा चेतसः संप्रत्ययस्तच्छ्रद्धेन्द्रियम् ।

( ब० ति० टी०, पृ० 54 )

**श्वानास्या**

सम्यग्व्यायामः श्वानास्या । ( ब० ति०, पृ० 56 )

**षडायतनानि**

षडायतनानि षट्चक्रवर्तिनः खण्डकपालाद्याः । ( ब० ति० टी०, पृ० 67 )

**समाधीन्द्रियम्**

स्मृतीन्द्रियोदानितान् धर्मान् यन्मनसि सर्वसारान्तरपरिहारेण स्थापयति, तत् समाधीन्द्रियम्। ( व० ति० टी०, पृ० 54 )

**संभारमार्गः**

तत्र संभारमार्गः कतमः ? द्वादश धर्माः। कतमे द्वादश ? चत्वारि स्मृत्युपस्थानानि, चत्वारि सम्यक्प्रहाणानि, चत्वार ऋद्धिपादाश्चेति। ( व० ति० टी०, पृ० 51 )

**संभोगकायः**

कण्ठमध्ये गतं चापि पद्मं तु षोडशच्छदम्।
( व० ति०, पृ० 78 )

कण्ठचक्रं संभोगकायः, अप्येषां धर्मामृतपरिभोगदानात्यनुरस्वादाच्च।
( व० ति० टी०, पृ० 78 )

षोडशारे तु संभोगः। ( व० ति०, पृ० 78 )
संभोगचक्रमध्ये तु ओंकारो वर्णदीपकः।
चतसृभिः कलाभिस्तु समन्तात् परिवारितः॥
( व० ति०, पृ० 79 )

यदा कण्ठे महारागरूपेण चन्द्रमाः स्थितः।
संभोगस्तु तदाख्यातो बुद्धानां काय उत्तमः॥
( व० ति०, पृ० 81-82 )

**साधुमती**

अङ्गुलीपादपृष्ठे श्मशानम्, सर्वपीठात्मकत्वादविकल्पपदानुभूतेश्च। सैव साधुमती, साधुनो नैरात्म्यस्य तत्र विद्यमानत्वात्। ( व० ति० टी०, पृ० 28 ]

**सामान्या**

धातुसाम्यस्य श्लेष्मणो वहनात् सामान्या गुह्ये। ( व० ति० टी०, पृ० 46 )

**सिद्धा**

स्वेदोत्पादः समापत्तौ सर्वत्र सिद्धः, तद्वाहित्वात् सिद्धा जङ्घयोः, सिद्धिनिमित्तोत्पादनं प्रति वा तदधिकारात्। ( व० ति० टी०, पृ० 46 )

**सिन्धुः**

पादपृष्ठादङ्गुष्ठे बोधिचित्तस्य स्पन्दनात् सिन्धुः पादपृष्ठम्। ( व० ति० टी०, पृ० 34 )

सिन्धुस्तु पादपृष्ठं वै। (व० ति०, पृ० 35)
सिन्धौ महाबला ख्याता सशोका चाश्रुवाहिनी।
(व० ति० टी०, पृ० 47)

**सुदुर्जया**

मुखकण्ठौ छन्दोहौ, रसोपभोगे छन्दवृत्तेः। सैव सुदुर्जया, रसान्निवर्तयितुमशक्यत्वात्।
(व० ति० टी०, पृ० 28)

**सुभद्रः**

सुखादाप्यायिकागुणवर्तिप्रवर्तकत्वात् सुभद्रः। (व० ति० टी०, पृ० 49)

**सुभद्रा**

शोभनं तर्पणं भद्रं कल्याणं यस्याः सा सुभद्रा। (व० ति० टी०, पृ० 47)
प्रज्ञाबलं सुभद्रा। (व० ति०, पृ० 55)

**सुमनाः**

खेटेन योगिनां सौमनस्यजननात् सुमनाः पादपृष्ठे। (व० ति० टी०, पृ० 46)

**सुराभक्षी**

सुरां सुधां भक्षयतीति सुराभक्षी, ज्ञानौलौ। (व० ति०, पृ० 47)
स्मृतिबलं सुराभक्षी। (व० ति०, पृ० 55)

**सुरावैरो**

सुराणां स्नायूनां वैरी वामकर्णात् प्रवर्तकः सुरावैरी। (व० ति० टी०, पृ० 48)

**सुवर्णद्वीपम्**

सुवर्णस्य सुसितत्विषश्चित्तस्य द्वीपमिव द्वीपं जङ्घाद्वयमेवैतत्। (व० ति० टी०, पृ० 34)
जङ्घाद्वयं तु विख्यातं सुवर्णद्वीपसंज्ञकम्। (व० ति०, पृ० 36)
प्रस्वेदवाहिनी नाडी सुवर्णद्वीपसंस्थिता।
समाकुला सुदीप्ताङ्गी मता सा चक्रवर्मिणी॥
(व० ति०, पृ० 46)

**सुवीरा**

सुष्ठु वीरादकारात् प्रभवतीति सुवीरा। (व० ति० टी०, पृ० 48)
उपेक्षासम्बोध्यङ्गं सुवीरा। (व० ति०, पृ० 55)

**सूक्ष्मा**

केशरोम्णां सुसूक्ष्माणां वहनात् सूक्ष्मरूपा शिखायाम्। (व० ति० टी०, पृ० 44)

**सूर्यनाडी ( रसना )**

नाभेरूर्ध्वं तु या नाडी वहत्यूर्ध्वमुखी तथा।
कण्ठमध्ये तु विश्रान्ता रक्तवहा प्रकीर्तिता॥
( व० ति०, पृ० 80 )

येयं दक्षिणपार्श्वे रसनाख्या नाडी, सा ऊर्ध्वमुखी नाभेरारभ्य कण्ठं यावद्रक्तं वहति।
( व० ति० टी०, पृ० 80 )

रक्तः सूर्य इति स्मृतः। ( व० ति० पृ० 80 )

**सेका**

सिञ्चति हृदयान् सुधारसेनेति सेका बाहुमूलद्वये। ( व० ति० टी०, पृ० 44 )

**सौराष्ट्रम्**

ऊरू सौराष्ट्र उच्यते। ( व० ति०, पृ० 34 )

सौख्यस्य राष्ट्रम्, विशिष्टकालदर्शने च ऊरुद्वयमेवान्योन्यम्। ( व० ति० टी०, पृ० 34 )

सौराष्ट्रे लोहिताख्या तु शौण्डिनी डाकिनी मता। ( व० ति०, पृ० 46 )

**स्मृतीन्द्रियम्**

वीर्येन्द्रियोदानिता धर्मा येन पुनः पुनरामुखीक्रियन्ते, न विस्मर्यन्ते, तत् स्मृतीन्द्रियम्।
( व० ति० टी०, पृ० 54 )

**स्मृत्युपस्थानानि**

कायानुस्मृति–वेदनानुस्मृति–चित्तानुस्मृति–धर्मानुस्मृतिनामकानि चत्वारि स्मृत्युपस्थानानि।·······श्रावकदर्शने तु नित्यसुखशुचिसात्मकचतुर्विपर्यासप्रतिपक्षानित्याशुचिदुःखानात्मलक्षणानि चत्वारि स्मृत्युपस्थानानीति विशेषः। मन्त्रदर्शने तु स्वसंविद्रूपा डाकिन्यः कायादीनां धर्मतारूपा ज्ञेयाः। ( व० ति० टी०, पृ० 52–53 )

**स्रुक्स्रुवौ**

स्रुवं तु रसनाख्याता हृच्चन्द्रो ललनात्मकः। ( व० ति०, पृ० 67 )

वामदक्षिणगे ललनारसने अधोद्रव्यवाहित्वाद् यथाक्रमं स्रुवस्रुवौ ज्ञेयौ।
( व० ति० टी०, पृ० 67 )

**स्वभावकायः**

द्वात्रिंशत्तु दलं पद्मं मूर्ध्नि मध्ये व्यवस्थितम्। ( व० ति०, पृ० 78 )

शिरश्चक्रं महाज्ञानं स्वभावकायः, पारमार्थिकबोधिचित्तस्वरूपत्वात्।
( व० ति० टी०, पृ० 78 )

